अङ्गदः—कहं दिसा ण जाणीअदि[1]।

हारीतः—होदु, समुद्दा[2]-चक्कं पेक्खिस्सं। [3](तथा कृत्वा) भो, उत्तर-दिसा भाए आअदा णोआ।

सुभद्रः—णं तत्थ एव्व सिंधु-दुग्गो।

डिण्डीरकः—चल, दूर-दिट्ठि-णलिएण पेक्ख पेक्ख।

चलः—णं पेक्खामि[4]। (इति तथा कुर्वन् साश्चर्यम्) अमच्चराअ, एक्कस्सिं त्थवदे[5] तिण्णि पाआरा दीसंति[6]।

डिण्डीरकः—तं[7] एव्व तस्स दुग्ग-त्थलं[8] ता झत्ति डोणी ढक्कलिज्जा।

अङ्गदः—दसा ढिल्लीकिआ[9] पवण पट्टिआ, एसो उण णोआ मुह-दडो[10] संभमिअ उवरि किंचि कड्ढिदो[11]।

चलः—(पुरोऽवलोक्य) अमच्चराअ, एसो दीसइ णाइदूरे णाइ-समीवे दुग्गो।

हारीतः—कहं[12] अम्हे पाहूण[13]रक्खसेहिं सह सज्जइ विहंडअ-हदओ।

अङ्गदः—हंत, आअच्छइ[14] विअ दीसइ।

(ततः प्रविशति दुर्गास्थः सराक्षस सज्जो विभण्डकः।)

विभण्डकः—

कहं सिणिद्धो रक्खाणं[15] सिंधु-दुग्गाहिद-ट्ठिई।
माणुसस्स णिए भीदो[16] कर देमि जडो विअ ॥८॥

---

कक्करमगाडयेहिं डोणी जाए कुडेड ॥ सर्वे तथा नाटयन्ति ॥व०॥ पार्श्वतोऽवलोक्य। सखेदाश्चर्यम्। अहह एत्थ मच्छपुच्छच्छदाफाडयेहिं फड त्ति फुट्टिया कामो वि डोणीओ ॥हा०॥ पुरोवलोक्य ॥ हंत कायं वि डोणीपरंगरेण्व पाडिवसअलंतरी-धरक्खेणजलणिहिजलतरलत्तणकालणेण अकंडसमुवट्ठिएण अप्पसुखेण महंतेण झंझावाडएण कत्थ वि भाए खेड्डजइ कायंपिणी ॥डि॥ हा हा टवमतो झंझावाओ स। अम्हो णोआ ढक्कतणीआ ॥ सर्वे तथा नाटयन्ति ॥

1. T दिसाओ ण थाणंति [ = णज्जंति ]। 2. T समुद्दा। 3. P सं ॥ T continues without any स। 4. °मि त्ति तथा in P। 5. T अमच्चराअ चिवाणसे विए ( = विअ ) एक्कस्सिं पव्वए। 6. P दीसंदि। 7 T omits तं। 8. T दुग्गं। 9. T कया। 10. T दडो। 11. T कड्ढिओ 12. T कहं दैवमेयणा विअ अम्हे। 13 पेक्खिअ is corrected on the margin by पाहुण in P। 14. T आअच्छंतो। 15. T रक्खाणं। 16. T भीओ।

विदूषकः—( सभयम् ) कहं रक्खसा आअदा ।

राजा—मुक्ख, पेक्खणिज्ज ।

हिण्डीरकः—अय्य, मा भआहि[1] ।

विदूषकः—( सोच्छ्वासम् ) होदु, रक्खोग्घ[2]-मंतं पढिस्सं । ( इति तथा करोति । )

हिण्डीरक.—( विचिन्त्य । सानन्दम् ) भो भो, जाव एसो[3] ण पचलीहोइ दाव विरइदग्गि-जंत-सद्दग्घो-डमरु डिंडिम-[4]मड्डु-दुंदुहि-ढक्का-चच्चरी-झल्लि झल्लरी-झज्झर-हुडुक्का-टाल मद्दल - मिअंग[5]-डप्फ ड-णीसाण-पडह णिग्घोसं दप्पण-विश्वा दंसणिज्जा तेसु अत्तप्पडिबिंबं अमुणंतो मुणंतो पडिरक्खस-बलं कदाचि[6] पलाअण-परो भवे ।

सर्वे—तह कादव्व । ( इति यथोक्तं कुर्वन्ति । )

विदूषक.—( कर्णयोरङ्गुल्यौ पूरयन् ) अहो, कह उट्ठिओ एक्कद व्व[7] सद्द कोलाहलो ।

राजा—साहु साहु, अपुव्वो उवाओ णिम्मिदा[8] ।

हिण्डीरकः—महाराअ प्पसादा[9] ।

विभण्डकः—( विलोक्य । ससाध्वसम्, स्वगतम् ) ह हो रक्खस बलं एदं, सद्द-कोलाहलेण सामग्गी-बहुलत्तणं[10] जाणीअदि, जअ पराजआ अ णिण्णआविसआ, कदाचि[11] दुव्विहि-दुव्विलास-वसाहि साजच्चेण अम्ह-रक्खसाणं पडिरक्खसाणं च जइ एकत्तणं भवे तदा महंतो अणत्थो भविस्सदि,[12] जाव अ एदे रक्खसा मह साहीणा दाव[13] एदेहिं सह कहिं वि गदव्वं ।[14] (प्रकाशम्) भो भो वअस्सा, आअच्छह । (इति सपरिवारो निष्क्रान्तः । )

हारीत.—कहं ण को वि एत्थ दीसइ, अहो सहला जादा अमच्च-राअ[15]-जुत्ती ।

हिण्डीरकः—( स्वगतम् ) अहो देव्व सहाअ महाराअस्स मण्णिमो

---

१. T भयाहि । २. T रक्खोग्घ । ३. P एसो पाडिप्फदी य प्पचलीहोइ । ४. T मड्डु । ५. T मुइंग । ६. T कदाइ । ७. T व्व पलयघणघडा घोर-गज्जणाडम्बरगंभीरो सद्दसंमड्डकोलाहलो । ८. T णिम्मिओ । ९. T °प्पसायो । १०. T corrupt । ११. T कदाइ । १२. T भविस्सइ जा एदे । १३. T दा । १४. T कहि विहं गदव्वं । १५. T राज ।

जं रक्खस-वलादिरित्तो[1] विहंडओ वि पलाइदो। (प्रकाशम्) भो, जअ वुत्तं णिवेदिदुं[2] महाराअ-समीवं गच्छम्ह।

अङ्गदः—(क्षणं स्थित्वा) ण अणुऊल-पवण-णुल्लिदाए डोणीए माहप्पेण झत्ति पत्त म्ह पारावार-वेलं[3]। ता ओदरम्ह। (इति सर्वे अवतरणं नाटयन्ति।)

डिण्डीरकः—भो सव्वे वि तुम्हे[4] णिअ-णिअ-घरं जाऊण[5] हुडुग-बाइलाओ उवह। अहं एक्को एत्व महाराअ पाअ-संणिहाणं जामि। (इति सपरिच्छदो निष्क्रान्तः।)

राजा—अहो अच्च सुदं एद[6] संविहाण।

विदूषकः—वअस्स, अदिसाइसं किअं[7] अमच्चेण।

राजा—णं रज्जं एव्व एदस्स[8]।

(प्रविश्य पटाक्षेपेण)

दौवारिकः—(सहर्षगद्गदम्) देव, पुत्तस्स।

राजा—(स्वगतम्) णं रज्जं एव्व एदस्स[9] त्ति भणिदे देव पुत्तस्स त्ति एसो भणइ, सव्वहा एसा सरस्सई सच्चा होदु। (प्रकाशम्) भमरअ। किं तं। (दौवारिकः पुनस्तदेव पठति।)

विदूषकः—(सक्रोधम्) भो ठेर,[10] सव्वं वि कहेहि।

डिण्डीरकः—णं आणंद-परवसो ता एव्वं कहेदि[11]।

दौवारिकः—देव्व, पुत्तस्स जणणीए सह देवी आअच्छइ।

विदूषकः—भो ठेर, का णाम सा जणणी।

दौवारिकः—पुत्तस्स।

राजा—वअस्स, किं पीडेसि[12] गच्छदु जरढो।

दौवारिकः—तह।[13] (इति निष्क्रान्तः।)

(ततः प्रविशति देवी पुत्रवत्यानन्दसुन्दरी भानुमती चतुरिका मन्दारकः प्रतिहारी च।)

---

१. T बद्धावलित्तो परवोत्तो [=रावत्तो] विहंडओ। २. T णिवेइदुं। ३. T has some additional passage: सु० ॥ हंत तीरम्मि म्मुहो णिपणग्रो ता सावहाणं कोलसुद्तरणिफलअसाहय्येहिं ओदराम्ह। इति etc.। ४. T तुम्हे। ५. गच्छह is substituted by जाऊण etc. on the margin in P। ६. T अहो विरहदप्पाइं इमं संविहाणं। ७. T कयं। ८. T इमस्स। ९. T इमस्स त्ति भणिए देव्व। १०. T ठेर पढ सव्वं। ११. T परवसो पढत्ता [=दमो ता] एव्वं णाणारस्द्दुरं कहेइ। १२. T पीडेहि। १३. P तहेत्ति नि°, T तहेत्ति नि°।

देवी—( उपसृत्य ) जेदु अय्यउत्तो पुत्त महूसवेण।

राजा—( सहसोत्थाय सानन्दम् ) देवि, सव्वं[1] सव्वं एदं तुह प्पसादो।

विदूषकः—मज्झ पिअ-वअस्सस्स पुत्तो संजादो। ( इति नृत्यति। )

डिण्डीरकः—उवविसदु महाराओ।

राजा—देवि उवविस, अहं वि उवविसामि। ( इति सर्वे यथायथमुपविशन्ति। ) [2]( सविस्मयम् ) देवि, कहं अत्तहोदी वही सचरदि।

भानुमती—सिद्ध-विज्ज-दिण्ण-वल्ली-भक्खणेण।

राजा—सिद्ध विज्ज दिण्ण-वल्ली-भक्खणेण एव सरीर-दिढत्तण।

देवी—किं सो सामण्णो।

विदूषकः—अवि सो च्चिअ जो अत्तहोदीए पिदुणा चण्डवेण्ण [3]अंगदेसाहि पेसिदो।

मन्दारकः—अह-इं।

विदूषकः—( नायिकामुपेत्य ) होदि, वड्ढसि एदेण सिसुणा।

नायिका—कहं [3]आमंतणोइदेसु[4] देवी-गएसु मं आमतेसि,[5] कहिं गदाइं[6] वरिसाइं।

विदूषकः—( सलज्जम्। देवीमुपेत्य ) वड्ढदु देवी पुत्तेण।

देवी—( स्वगतम् ) एणं दाव कोदुअं करिस्सं। ( प्रकाशम् ) पुढमं जत्थ तुम गदो[7] तत्थ एव्व गच्छ।

विदूषकः—( सखेदम्। राजानमुपेत्य ) वड्ढदु भवं पुत्त-महूसवेण।

राजा—णं सव्वस्स देवी छत्तं, को उण अहं।

विदूषकः—( सक्रोधमुच्चैः ) किं अम्मालादो[8] पडिदो एसो बालो। ( सर्वे उच्चैर्हसन्ति। )[9] ( शिशुमुखमवलोक्य ) अहो माढु[10] मुहो एसो, ता बहु-भग्गो[11] भवे।

चतुरिका—अय्य सच्च एव्व।

प्रतिहारी—महाराअ, दाणि अणवराहा अहं। ( राजा हसति। )

---

१. T सव्वं only once। २. PT रा। सवि°। ३. T अंगदेसादो वअत्त चोद्दहीमज्झपयो एत्थ पेसियो। ४. P आमंदणो°, T आमंदणोइदाए। देवीए ममं। ५. P आमंदेसि। ६. T कहिं दे गआइं। ७. T गयो। ८. T अम्मालादु पडियो। ९. PT वि। शि° १०. T मायमुहो। ११. T बहुधण्णो।

देवी—अय्यउत्त, आणंदचंदो त्ति पदस्स[1] णामहेअं जदो तुम्हाणं उहआण वि णामकदेस[2]-घडिअं।

राजा—को णाम लंघइ देवी-[3]सासणक्खरं।

देवी—( सस्मितम्। शिशुं गृहीत्वा ) अय्यउत्त, ऊसगे ठावेहि पुत्तअं।

राजा—( सानन्दबाष्पम् ) जं देवी आणवेदि। [4]( इति तथा करोति। )

( नेपथ्ये। वैतालिकौ पठतः। )

पथमः—

सव्व-क्खोणी-मंडली-णाह एण्हि[5]  
भासि प्फीदं सूणुणा गेहिणीहिं।  
गंगा-गोरी-छम्मुहेहिं हरो वा  
भूमी-लच्छी वम्महेहिं विहू व ॥९॥

द्वितीयः—

पुत्तो जादो तुज्झ तूसति[6] लोआ  
रित्तो कोसो संभिअ लोअ-गेहं।  
बालं एव्व प्पेक्खिदुं एदि[7]लोओ  
णव्वं णव्वं पट्टणे होइ वुत्तं[8] ॥१०॥

देवी—अय्यउत्त, किं दे पुणो वि पिअं करेमि।

राजा—अदो वि अवरं पिअं। पेच्छ।

एक-च्छत्त-पइत्तणं मह तुमं[9] रद्धा वि तुट्ठा परं  
एसा पाण-वहू तरुण-पइणा बंधुत्तणं वधिअं।  
सिंधुट्ठो विजिदो[10] विहंडअ-रिऊ वंसावदंसो सुदो[11]  
किं मग्गामि गिहाण[12] णाम भुवणे जं देवि मे दुल्लहं ॥११॥

तह वि एदं अत्थु।

( भरतवाक्यम् )

---

१. T इमस्स। २. PT णामक°। ३. T सासणक्खरं। ४. °दि त्ति तथा in P। ५. T एण्हि। ६. P यादृदि,। ७. T एइ। ८. T वुत्तं। ९. T तुवं। १०. T विइदो। ११. T सुयो। १२. T गहाण।

सज्जा पंच-स-दुस्सुल्लोअ करणे णिंदंतु[1] मा सक्कइं
मिच्छा-दोस गवेसणेक्क[2] मइणो मा होंतु[3] सप्पंडिआ[4] ।
ईसारोस-करंतिए[5] णिअ-किदि वाएदु मा सक्कइं
मा वएहंतु[6] णर-त्थुइं सुकइणो दुप्पाट्टअं रक्खिदुं[7] ॥१२॥

अवि अ ।

आणंदसुंदरी गिरिभू-चंपअ-वल्लि[8] जएहुआ-जुट्टो ।
अ'णंद-चद-गुहवं[9] मिहंदचंदेसरो चिरं जेउ ॥१३॥

( इनि निष्क्रान्ताः सर्वे । )

॥ चतुर्थं यवनिकान्तरम् ॥

॥ संपूर्णमिदमानन्दसुन्दरी-नामकं सट्टकम् ॥

॥ [10]श्रीरस्तु ॥ छ ॥



1. P णिंदंदु । २. P °ण०क°, T °णक्क° । ३. P होंदु । ४. T दुप्फंडिया । ५. T रोसअरंतिए णिअक्किइं । ६. P वएहंदु ७. T पोसिदुं । ८. T वेल्लि । ९. T चंद सम्हिइंद । १०. T omits this line ।

॥ श्रीः ॥

# [ । भट्टनाथविरचिता संस्कृतव्याख्या । ]

श्रीगणपतये नमः । अविघ्नमस्तु । इष्टसिद्धिरस्तु । श्रीरस्तु । सरस्वत्यै नमः । लक्ष्म्यै नमः । शुभमस्तु ॥

गणनाथपदाम्भोजद्वयं वयमुपास्महे ।
सर्वासामपि विद्यानां यदेव शरणं मतम् ॥ १ ॥
आनन्दसुन्दरीनाम्नो घनश्यामकवेः कृते ।
तन्यते भट्टनाथेन सट्टकस्य विवेचनम् ॥ २ ॥

[ Page 1 ] अथ तावदारब्धग्रन्थपरिसमाप्त्यर्थं मङ्गलमाचरति ॥ अत्ताणं इति । आत्मानं कौस्तुभे प्रतिफलिततरं ज्ञात्वा कौतूहलं कर्तुं यावत्प्रपन्ना मन्मथमर्पं भार्गवी तारन्ध्रीम्म् । मुग्धे किं भ्रातृसंगं करोषि न खलु तवापत्रपेति सहासं वदन् चक्रपाणिः सरभसदयितालिङ्गितः पातु युष्मान् ॥१॥ अत्र अमर्षः अन्यस्त्रीधारणाभ्युक्तः । स च कौतूहलार्थमारोपित इति बोध्यम् । सहासमिति क्रियाविशेषणम् ॥ अपि च । जं इति । यत्राग्नीनलमन्थितत्रिमिपटीशार्दूलचर्माञ्चलम् अन्योन्यं रतिनाथशासनवशात्कौतुकेन रात्रिंदिवम् । तद्बिम्बाधरचुम्बिसुन्दरमसृणस्यूतस्तनालिङ्गितं मोहं सौख्यगृह प्रददातु मिथुनं युष्माकं विस्मापकम् ॥२॥ अलममुना । पंचेसु इति । पञ्चेषुप्रभोस्त्रिलोकजयिनो येषां कटाक्षाः शराः भ्रूदण्डो धनुर्वल्लरी भुजलतापाशश्च तत्तादृशाः । तेषां षोडशहायनानां महिलाहीराणां जीवौषधं नीवीमोक्षमहासुखं भजत ननु कामारेर्दुर्लभम् ॥ ३ ॥ 'दोलादशनदण्डेषु ह' इति दण्डशब्दे विद्यमानस्य हस्य डत्वम् ॥ अन्यच्च । लुलंत इति । लुलत्कुचमालिकं श्रवणशिथिलनीलोत्पलं मणुन्माणमण्डनं सलिलमण्डलवर्दलिकम् । स्खलच्च्युतविशेषकं स्थगितदीर्घदृष्टिच्छटं प्रमोदरसनिर्भरं जयति श्रीरुवीरायितम् ॥४॥ सलिलमण्डलानि सलिलबिन्दव इति यावत् । 'मण्डलं बिन्दुबिम्बयोः' इति यादवः ॥ स्थापकः इति सूत्रधार इत्यर्थः । तथा चोक्तमाचार्यैः । स च सूत्रधार एव पूर्वरङ्गस्य स्थापकत्वात् स्थापक इति चाभिधीयत इति ।

॥ श्रीः ॥

# [ । भट्टनाथविरचिता संस्कृतव्याख्या । ]

श्रीगणपतये नमः । अविघ्नमस्तु । इष्टसिद्धिरस्तु । श्रीरस्तु । सरस्वत्यै नम. । लक्ष्म्यै नमः । शुभमस्तु ॥

गणनाथपदाम्भोजद्वयं वयमुपास्महे ।
सर्वासामपि विद्यानां यदेव करणं मतम् ॥ १ ॥
आनन्दसुन्दरीनाम्नो घनश्यामकवेः कृतेः ।
तन्यते भट्टनाथेन सट्टकस्य विवेचनम् ॥ २ ॥

[ Page 1 ] अथ तावदारब्धग्रन्थपरिसमाप्त्यर्थं मङ्गलमाचरति ॥ अत्ताणं इति । आत्मानं कौस्तुभे प्रतिफलिततरं ज्ञात्वा कौतूहलं कर्तुं यावत्प्रपन्ना मनस्यमर्षं भार्गवी तावल्लीनम् । मुग्धे किं भ्रातृसंगं करोषि न खलु तवापत्रपेति प्रहासं वदन् चक्रपाणिः सरभसदयितालिङ्गितः पातु युष्मान् ॥१॥ अत्र अमर्षः अन्यस्त्रीधारणाप्रयुक्तः । स च कौतूहलार्थमारोपित इति बोध्यम् । प्रहासमिति क्रियाविशेषणम् ॥ अपि च । जं इति । यत्रामीनलग्नग्रन्थितक्रिमिपटीशार्दूलचर्माञ्चलम् अन्योन्यं रतिनाथशासनवशात्कौतुकेन रात्रिंदिवम् । तद्बिम्बाधरचुम्बिसुन्दरमसृणस्थूलस्तनालिङ्गितं मोदं सौख्यगृहं प्रददातु मिथुनं युष्माकं विस्मापकम् ॥२॥ अलममुना । पंचेसु इति । पञ्चेषुप्रभोस्त्रिलोकजयिनो येषां कटाक्षः शरः भ्रूदण्डो धनुर्वल्लरी भुजलतापाशश्च तत्तादृशः । तेषां षोडशहायनानां महिलाहीराणां जीवौषधं नीवीमोक्षमहासुखं भजत ननु कामारेर्दुर्लभम् ॥ ३ ॥ 'दोलादशनदण्डेषु ड.' इति दण्डशब्दे विद्यमानस्य दस्य डत्वम् ॥ अन्यच्च । लुलंत इति । लुलत्कुचमालिकं श्रवणशिथिलनीलोत्पलं मरणन्मरणमण्डन सलिलमण्डलवद्दलिकम् । स्खलच्च्युतविशेषकं स्थगितदीर्घदृष्टिच्छटं प्रमोदरसनिर्भरं जयति मीरुचीरायितम् ॥४॥ सलिलमण्डलानि सलिलबिन्दव इति यावत् । 'मण्डलं बिन्दुबिम्बयो.' इति यादवः ॥ स्थापकः इति सूत्रधार इत्यर्थः । तथा चोक्तमाचार्यैः । स च सूत्रधार एव पूर्वरङ्गस्य स्थापकत्वात् स्थापक इति चाभिधीयत इति ।

किं णु खु इत्यादि। किं नु खल्वेतत्पाण्डुरं दृश्यते। भवतु, गृहीत्वा द्रक्ष्यामि। कथं पत्रकमेतत्।

[Page 2] हन्त अक्षरावल्यो लिखिताः। को नु खलु वाचयिष्यति। भवतु यवनिकान्तरात् कोऽपि तुण्डं दर्शयति, तं तावदाकारयिष्यामि। तुंडं आननम्। इत इतो भद्रमुखः॥ प्रस्तावनायां क्वचिद्विदूषकस्यापि प्रवेशो युज्यते। अत एवोक्तमाचार्यभरतेन। 'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्' इति॥ किं कार्यं कथ्यताम्॥ कथमार्यमाण्डव्यः। एतत्पठ्यताम्॥ कि तेन मम ब्राह्मणस्य लाभः॥ इदमेव पत्रकं दीयते॥ तस्माद्गमिष्यामि॥ आर्य, मा परिहस। वाचनानन्तरं ददामि॥ भवतु पोरकस्य वाचननिमित्तं भविष्यति। एष वाचयामि॥ अवहितोऽस्मि॥ स्वस्ति भरतकुलतिलकाय सुखमव्याहतं सर्वतो विशेषस्तु परःसहस्राणि नाटकानि गृहं गृहं वर्तन्ते प्रेक्षितानि चास्माभिः, इदानीं पुनरपूर्वं चमत्कृतिरसभरभरितं किमपि निबन्धनं दर्शनीयं युष्माभिरिति॥ हंहो विनयसूक्तिः प्राश्निकानाम्॥ किं सामाजिकलेख एष॥ अथ किम्॥ तेन हि त्वरस्व त्वरस्व॥ अस्त्यत्र आनन्दसुन्दरीनामधेयं तादृत्तं सट्टकं, तदेवास्मिन्महासमाजे योग्यम्॥ अनेन सामाजिकानां प्रबन्धस्य चातिमहत्तरत्वं व्यज्यते॥ प्राकृतं खलु तत्सर्वम्॥ अत एव सट्टकमिति भण्यते॥ अनेन सर्वप्राकृतं सट्टकमिति स्पष्टमुक्तं भवति। तथाचाहुराचार्याः। 'सैव प्रवेशेन विना विष्कम्भेन विना कृता। अङ्कस्थानीयविन्यस्ता चतुर्यवनिकान्तरा। प्रकृष्टप्राकृतमयी सट्टकं नाम नामतः। सैव नाटिकैवेत्यर्थः' इति॥ को नु खलु तस्य कविः॥

[Page 3] कोऽन्यः पुरातनकवीनामपि दुष्करे सरस्वतीभाषानिबन्धने राजशेखरकवेः परं निपुणः॥ पुरातनकवयो डिण्डिमसार्वभौमादयः। राजशेखरकवेः परं निपुण इति राजशेखरकवेरपि परम् उत्कृष्टं यथा तथा निपुणो भवतीत्यर्थः। तच्चोत्कृष्टत्वं गर्भनाटकद्वयसंविधानरहस्यसन्दर्भविशेषप्रयोगगहनत्ववस्त्वपूर्वत्वश्लेषोक्तिपरानुक्तार्थवर्णनादिविशिष्टप्रबन्धकर्तृत्वमेव। तत्र नैपुण्यं स्वस्यैव वर्तत इति कवेर्महतीयं प्रशस्तिरवगन्तव्या। अनेन अनीदृशप्रबन्धकर्तरि राजशेखरकवौ निकर्ष उक्तो भवति। अत एव 'अणहणाहअं विअ सट्टअ असट्टअरो विअ सकई' इति अग्रे चतुर्थयवनिकान्तरे कविना वक्ष्यते। श्रीकण्ठस्तु पुरातनकवयः कालिदासादयः, राजशेखरकवेरिति पञ्चमी। परम् अत्यन्तम्। तेन

राजशेखरकवेः पुरातनकवीनामपि दुष्करे सरस्वतीभाषानिवन्धने अन्यः कः परं निपुण इत्यन्वयो योज्यः। तेन च प्रकृतप्रबन्धकविरेव परं निपुण इत्यर्थो लभ्यते। कवेरप्ययमेवाभिप्राय इति व्याचकार। लक्ष्मणादयस्तु पुरातनकवयो वाल्मीकिप्रमुखाः। राजा चन्द्रः। 'राजा मृगाङ्के क्षत्रिये नृपे' इत्यमरः। तच्छेखरः परमेश्वरः तस्य कविर्ब्रह्मा ब्रह्मणश्च परमेश्वरकवित्वं 'शम्भो तव गुणस्तोत्रेष्वहं मर्त्यकवि. कियान्। यद्ब्रह्मविष्णुविर्वेद प्रबन्धैस्तौति ते गुणान्॥' इति पौराणिकवचनैः प्रसिद्धम्। तथा च पुरातनकवीनां *वाल्मीकिप्रमुखाना राजशेखरकवेरपि ब्रह्मणोऽपि दुष्करे* सरस्वतीभाषानिवन्धने कोऽन्य पर निपुण इति वाक्यार्थो योजनीयः। एतेन अस्यैव कवेः सर्वातिशायित्वं संसूच्यत इति व्याचकुरित्यलमति प्रसङ्गेन॥ अपि स महाराष्ट्रचूडामणिर्घनश्यामकवि.। ईसो इति। ईशो यस्य खलु पूर्वज' पुनर्महादेवः पिता, अम्बा काशी यस्य च सुन्दरी प्रियतमा शाकम्भरी च स्वसा। सप्ताष्टोक्तिलिपिप्रभुर्गुणखनिश्चौण्डाजिबालाजेः पौत्रो द्वाविंशतिहायनश्चतुरधीयः सर्वभाषाकविः॥ ५॥ पड् इति। षट्पद्भाषाकाव्यं नाटकभाणौ रसोर्मिलौ चम्पू। अन्यापदेशशतकं लीलया विरचितं येन॥ ६॥ अथ किम्। अपि प्रस्तुतरूपकारम्भसमये किमप्यभाणीत्। अभाणीदेव। भणीअ इत्यत्र 'ईअ भूते' इति ईअ-आदेशः। किमिति। वाणी इति। वाणीशासनगौरवे कृतमतिर्मय्याम्यहं सट्टकम् ईर्ष्यया न खलु तत्र शङ्क्यं मुधा धीरा गुणं गृह्णीत। ओ किं दीनवचोभिः शङ्क्यं सुखं पाण्डित्यगर्वोद्धटा इदानीं सर्वकलाम्बुराशितलकं युष्माभिरिष्टं यदि॥६०॥ इति। ओ पश्चात्तापे। अनेन च श्लोकेन कवेः प्रत्यक्षवाणीत्वं सर्वविद्यासमुद्रमूलभूतलद्रष्टृत्व च व्यज्यते। शोभन्ते नाम गर्वोक्तय॥ स एव कवि कण्ठीरवकविरिति च भुवनेषु कीर्त्यते। न जानामि तत्र को हेतुरिति॥ ननु तस्यैव एकं श्लोकं श्रुत्वा सर्वैरेव मनीषिमण्डलैः कण्ठीरव-कविरिति नामधेयपारितोषिकं दत्तम्॥ को नु खलु स एक. श्लोकः। अन्यापदेशनिबन्धनाथोऽयं सारङ्गा इति श्लोकः॥ युज्यते युज्यते॥ आय किं खाद्यमाननवदूर्वः सिन्धुदेशाघोट इव स्फुरदोष्ठो दृश्यसे॥ एतादृशकविर्भूत्वा कथं प्राकृतनिबन्धनकरणे न लज्जितः॥ न लज्जित.। तत्रैव शृणु।

[ Page 4 ] पाखंडो इति। पाषण्डो न मरं तितिक्षते, विटः शीलानि, विद्यां जडो, यद्यस्य सुदुर्लभं क्षितिषु स तत्तन्मुधा निन्दति। हुं अवहितः शृणु। ते सर्वे पुनरेकदेशकवयो ये एकभाषाचणाः स सपूर्ण

कविर्विभाति भुवने यः सर्वभाषाकविः ॥ ८ ॥ अनेन कवेर्वैदिकलौकिकसरण्येसाधारणप्रागल्भ्यं वर्णितं भवति ॥ स्वस्ति भवते, गृहकार्यमुपरुध्यते, तस्माद् गमिष्यामि ॥ एवमिव ॥ तथा [इति]। अपि नाम आर्यमाण्डव्यो गृहीतभूमिकं मारिषं त्वरमाणः प्रेषयित्वा उपकारी भवेत्। आर्याः सामाजिकाः किं भणथ ॥ अहो इति। अहो अभिमुखो विधिस्तथा हि सारसीभूः सभा निरन्तरविभूषिता मधुररङ्गशालेयम्। महानटशिरश्चापगा नलिनसौरभं सट्टक सुधारसवचाः कविर्जयति षट्प्रबन्धीकरः ॥ १० ॥ सभेत्यत्र "ख घ थ ध भां हः" इति हकारो नेष्यते। तथा चोक्तं प्राकृतमञ्जर्याम्। 'पक्खण्णो पलअघणो सो पाथेअं वाधअं सभा च पुनः। पञ्चस्वेषु न हत्व प्रायावृत्तिप्रसङ्गेन॥' इति। यतो मङ्गलडिण्डिमसंगरवः समुज्जृम्भते ततः प्रकृतमुपस्थितं मन्ये ॥ लुढंत इति। लुठद्भसलावली [=भ्रमरावली]–प्रणयडम्बराचुम्बिताः स्फुरन्नवमल्लिका विनिपतन्ति रङ्गाङ्गणे। अनन्तमुखदेवतामथितवीचिसिन्धुस्थलीकथत्पयोमण्डलीनिबिडबिन्दुलीलाधराः ॥ ११ ॥ लुढंत-अलिमालिआ इति पाठे लुठदलिमालिकेत्यर्थः ॥ आर्याः किं भणथ। भरतपुत्र त्वर्यतां त्वर्यतामिति। अपि नाम ममापि

[Page 5] पुत्रो भूत्वा सोऽप्यहमिव भरतपुत्रेति आकारणस्य स्थानमर्ही भवेत्। कथं वा मम पुत्रयोग्यत्वं यद्गृहिणी अपुष्पिणी संवृत्ता। अलं विचारैः। अहं इति। अहं मनोज्ञां परिणयामि दण्डकुमारिकां पुत्रमहोत्सवाय। शिखण्डचन्द्र इव चण्डवेगकन्यां महीमण्डलसार्वभौमः ॥ १२ ॥ एतु एतु भर्ता ॥ अहो कथं प्रत्यूष एव प्रतिबुद्धः प्रतिहारिकानिवेद्यमानमार्गः महाराजोऽन्तःपुराद्धर्मासनस्थानमण्डपं सेवते, तस्मादहमप्यनुपदयोग्यकरणीयाय सज्जीभवामि ॥ आमुखमिति प्रस्तावनेति यावत्। तथा चोक्तमाचार्यभरतेन। 'स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्। प्रस्तावना वा तत्र स्यात्॥' इति। एतु एतु देवः ॥ जलणिहि इति। जलनिधिरसनाया वल्लभोऽस्मि क्षितेः प्रणयमरतिनीत्यैव रञ्जयामि लोकम्। कुलसमुचितशीला प्रेयसी सुन्दररूपा धरणिकृतनिवासाः शासनस्था नरेन्द्राः ॥ १३ ॥ सलिलहियसणाए इति पाठे सलिलाधिपमनाया इत्यर्थः ॥ सिन्धुमध्यमतलगते सिन्धुदुर्गे वर्तमानाय राक्षसपलातिरेकेण करद्रविणान्यददतः सिद्धकुलकक्षूरस्य विमण्डडक्षतकस्यापि समूलपातं घातनाय पूर्वपुरेव प्रभावे

प्रहितो हिण्डीरको विरचितपरम्परापराभवो न चिरमागच्छेत्। सर्वमिदं समञ्जसं परतु रात्रिंदिवप्रदीप्तप्रज्वलद् सहानिरन्तरपृथुलाधिदहनदह्यमानगात्रेतराङ्गस्य ममैकमेवात्र खेदावहम्॥

[ Page 6 ] सामीरिम्न इति। सामीरितामृतमधुरगिरोत्तरङ्गम् उत्सङ्गमण्डनमणिं शुभपञ्चचूडम्। लालाजलैरीपदार्द्रतनु शिशुं यदालिङ्गितुं हतविधिर्न मा घटयति॥ १४॥ मामि अधम्। गिराशब्द आकारान्तोऽप्यस्ति। 'आत्व चैव हलन्तानाम्' इति प्रयोगश्च। अधिगम्य गिरामनीतमूल्यमिति॥ अथवा कियास्तावदेप निर्वेदो ननु स्थापितैव मया अन्तःपुरे मन्दारकरकुम्भजेशो देवी ज्ञास्यतीति भयेन पिङ्गलक इति नामधेयं विन्यस्य पुरुषवेषाच्छादितविग्रहा मम प्रीतिं सपादयितुकामेन सुगृहीतनामधेयेन अङ्गराजेन प्रेपिता आनन्दसुन्दरी नामात्मनः कन्या। तस्याः पुनरदूरे मम पुत्रो भवेत्। यतो जातकपत्रकेऽपि अस्य द्वितीयपरिग्रहे सन्तान इति जागर्ति दैवज्ञादिभिरपि तथेत्यालपितमालप्यते च॥ अथ जय जयेत्यादिस्तुतिर्वैतालिकैरितेति लक्षणात् जय जयेत्यादिना प्रातस्तन स्तोत्रमुपक्रम्यते॥ जय जय शृङ्गारवतीवल्लभ, जय जय भण्डीरकदेवनन्दन, जय जय लीलावतीदेवीगर्भशुक्तिरत्नमौक्तिक, जय जय डमरकहेलाविहार, जय जय चम्पकवल्लीकौमारहर, विजयी भव। इदानीं खलु। जाइ इति। याति स्थविरवियोगिनीसुखगतच्छायाश्रिय चन्द्रमा जाता शुष्ककपित्थडिम्भसदृशी नक्षत्रमाला तथा। शुक्र स ऋषिभिर्वहति दिवसे दीपस्य दीनां दशाम् आकाशो जलदैर्भाति म्रहणे सिन्धुस्तरङ्गैर्वे॥१५॥ इवार्थको वशब्दः। तथाचोक्तम् 'कादम्बरखण्डितदलानि व पङ्कजानि' इति॥ अपि च। लीला इति। लीलासङ्गरखिन्नभीरुसुरतस्वैरं विदग्धस्त्रीमहामानग्रन्थिविमुक्तिसाधितमणिं कन्दर्पदर्पायुधम्। मल्लीवृन्दमरन्दबिन्दुलुलित पाटीरगन्धावलिग्राहामन्दतरः समीरणशिशुर्मन्दं मुहुः स्पन्दते॥ १६॥ केचित् भीरुसुहृत्रो इत्यत्र भीरुसुभग इति व्याचक्रुः। लोके मन्त्रतन्त्रादिसाधितमणिदर्शने सति ग्रन्थिमोक्षो भवति॥

[Page 7] फारं इति। स्फार नन्दति चक्रवाकमिथुनं बन्धूकरक्ते यथा जीवजीवगणः खिद्यते तथा तवारियूथं यथा। दृष्ट्वा तव पातकमिव गतं दूरं तमिस्राङ्कुरं दुष्प्रेक्षो भुवने भवान् यथा तथा सूरः समुन्मी-

लति ॥ १७ ॥ राजदर्शनस्य पातकापनोदित्वं प्रसिद्धमेव । अत एवोक्तं महाभारते । 'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दर्शनेन पुनन्त्येते तस्मात्पश्येत्तु नित्यश' ॥' इति । श्रीकण्ठस्तु सूरो समुम्मीलइ इत्यत्र सूर्यः समुन्मीलतीत्यर्थमुक्त्वा सूरो इत्यत्र च 'तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः' । 'सूर्ये वा' इति विकल्पेन यस्य रेफादेश इति व्याकरोत् । अन्येऽपि केचिदेवमेव व्याचक्रुः । भट्टराघवस्तु सूर्यस्य सूर इति च नाम्नो वर्तमानतया लाघवेन चास्मन्मतमेवानुसृत्य व्याचकारेति दिक् ॥ अपि च । उग्घाडिज्जइ इति । उद्घाट्यते सुन्दरीभिः स्वैरं लीलाकवाटं द्विजा अर्घ्यं ददति बिसप्रसूनकलितं मन्देहचण्डारये । धूमो दृश्यते दीक्षिताग्निजनितः शालागृहस्योपरि स्तोकं गोपुरमस्तकेषु पतितो हेलया बाला तपः ॥ १८ ॥ बिसप्रसून कमलम् । मन्देहचण्डारिः सूर्यः ॥ सव्वहा इत्यादि । सर्वथा स्वस्ति भविष्यति यतो जय जयेति जयपूर्वा उत्थिता सरस्वती ॥ हेमवति ज्ञायतां किमेतदिति ॥ यद्देव आज्ञापयति । जयतु भर्ता, आर्यमाण्डव्यो मण्डूरवेण समं कलहायते ॥ हेमवति अपि सत्यम् ॥ किं मौलेरुपरि मौलिर्मम येनालीकं देवपादयोर्विज्ञापयामि ॥ विचारणीयमेतत् । तेन हि त्वरिततरं द्वावपि प्रवेशय ॥ तथा । इत इतः कलहचण्डौ ॥ वर्धतां भवान् ॥ हे राजन् स्वस्ति भवते ।

[ Page 8 ] वयस्य किं नु खल्वेतत् यत्सर्वैरेव युध्यसे ॥ हु, मा पृच्छसि ॥ किं त्वं राजा ॥ राजसख ॥ शृणु भो राजन् । एष खलु अद्य अस्माकं गृहे स्वयमागत्य उपर्यवलोकयन् सर्वतोऽपि बालेषु खेलत्सु वशाय इति भणितवान् ॥ अहो अस्य दुर्विनीतत्वम् ॥ किं मया अलीकं मन्त्रितम् । कीचकगृहमिति तथा भणितम् ॥ रे रे मूर्ख सत्यं कथय पुनरपि किं भुक्ति बुक्कितमित्यर्थः ॥ श्वरवे बुक्कधातुः ॥ वयस्य किं कर्तव्यं मया ॥ समान्त्येद्वि कर्तुं परःसहस्रा अकालमृत्यवो मिलितास्तत्क्षणं प्राणसंरक्षणाय । नहि नहि वंशस्य निर्वंशस्ते आलय इति भणितम् ॥ मण्डूरक क्षमस्व, संप्रति गृहं गच्छ ॥ यद्देव आदिशति ॥ एष महाब्राह्मणस्तस्मात्परितोषणीयः । हेमवत्यस्य मण्डूरकस्य सहस्रं दीयताम् ॥ लगुडताडनानाम् ॥ तस्यान्यः को योग्यस्त्वत्तः । कोऽन्यपरो विषयः पादरक्षाताडनानां कुक्कुरदष्टात् । कुक्कुरः शुनकः ॥ भर्तः किं पणानाम् आहोस्विद्दीनाराणाम् ॥ ननु प्रथमानाम् ॥ पश्चिमानाम् ॥ मम धर्म एषः ॥ तथा ॥ वयस्य कस्मात्पुनस्तस्य गृहं गतोऽसि ॥

[ Page 9 ] भो निद्रापरवशतया ॥ किं तत्र कारणम् ॥ प्रत्यूषनिद्रा अनुभवितव्येति निशीथ एव स्नानसंध्याहोमादिकं सर्वं ब्राह्मणकर्मजातं समापितम् ॥ हुमित्याकर्णनाभिनयः ॥ अनन्तरं बहिर्देशे लघुशङ्कायै आगतोऽहं मध्ये पुनर्निद्रापिशाचिकाविष्टो निजगृहशङ्कया तद्गृहं प्रविष्टः ॥ अहो कीदृशं तावत्तत्र ब्राह्मणत्वम् ॥ भो मुष्टिमेययज्ञोपवीतस्य मम ब्राह्मण्ये का हानिरासीत् ॥ तिष्ठत्वेतत् । भो मुष्टिमेयपदेन स्मृतं मयेदानीं यत्खलु पारिजातकविना तस्या मुष्टिमेयमध्याया आनन्दसुन्दर्याः समागमनादिकं सर्वं वृत्त नाटकतया ग्रथितमिति त्वया पुरा कथितं तद्द्रष्टव्यम् ॥ साधु वयस्य साधु, युक्तमुक्तम् ॥ कोऽत्र द्वारे ॥ आज्ञापयतु भर्ता ॥ हेमवति पिङ्गलकेन सह मन्दारक आकार्यताम् ॥ तथा, इत इतो भद्रमुखौ ॥ जयतु देवः ॥ अत्रोपविशतु पिङ्गलकः । एवमिव ॥ तथा । आर्य सर्वं सज्जीकृतम् ॥ किं विलम्ब्यते ॥

[ Page 10 ] इतस्तावन्नन्दरथः ॥ अथेदानीं गर्भनाटकं प्रक्रम्यते । अएणाए इति । आज्ञया वितरेया कन्याऽऽनन्दसुन्दरी । युक्ता कञ्चुकिधात्रीभ्यां प्राप्ता ननु शृङ्खलावताम् ॥ १६ ॥ तस्मादहमप्यनन्तरकरणीयाय गच्छामि ॥ अज्जुए इत्यादि । अम्ब किं निमित्तमत्र मां तातः प्रेषयति ॥ जाते वयोनुरूपं तव मङ्गलं कर्तुम् ॥ हंहो प्रत्यक्ष इव वेप. ॥ कंचोली इति । कञ्चोली दृढमन्थिता कुचतटे पादे कृता पादरक्षा वेश्या मणिभूषणेषु शीर्षे दत्तं वस्त्राञ्चलम् । घोलः काञ्चनकाञ्चिकायां गुणितः कच्छेन पश्चात्समम् एषा मन्मथवल्लभा विलसति प्रस्थानशीलेव ॥ २० ॥ कञ्चोली कञ्चुकः । घोलः आपादलम्बिनीचीसारसमुच्चयः । अत्र केचित् पट्टाणसीला इत्यत्र पट्टाणशब्दो म्लेच्छविशेषवाची देशायः तच्छीलेव विलसतीति व्याचक्षुः । रामचन्द्रेणाप्येवमेव व्याकृतम् ॥ पिङ्गलअ इत्यादि । पिङ्गलक, सदृशः खलु तव स्वरः ॥ इदानीं लज्जा आगमसमये पुनः संभ्रमः ॥ आर्य अलं परिहासैः ॥ मया परिहसितमाहोस्वित् सत्यं भणितं वेत्ति तव नामकरणोपाध्यायः पृच्छ्यताम् ॥ नामकरणोपध्यायो राजेत्यर्थः । इयं च परिहासोक्तिः ॥ आर्य कुरङ्गक शिबिका वर्तमान्न दृश्यते ॥ कदाचिदस्य राज्ञो देवी अस्माकं समागमनं श्रोष्यतीति यदैतत्पुरोपशल्यं प्रपन्ना वयं तदैव घात-नगरं प्रेपिता ॥ भो वयस्य मम एकस्यैव न भयं देव्याः यत्कुरङ्गकादयोऽपि बिभ्यति ॥ कथमात्मनः पाण्डित्यं कृतं कञ्चुकिना ॥

[ Page 11 ] निमित्येकदा नाहं पृष्टा ॥ उदार इति । उदारभ्रूकम्पं

भ्रमिततरलारुणनयनं कृतग्रीवाभङ्ग स्फुरितसुकुमाराधरपुटम् । यतो दृष्ट एष सुमुखि त्वया सप्रति तत, अयमेको धन्यो विधिकृतिपु शेषो न हि कृती ॥ २१ ॥ अहो एषा देवीतोऽपि चण्डिका ॥ जाते मा कुप्य, तदा निद्रिता खलु त्वम् । निद्रिता सजातनिद्रेत्यर्थ ॥ ननु विस्मृत मया ॥ अव्वो पादद्वयो लोष्टखण्ड पतित तस्मादेन परिहर । अव्वो इति खेदवाचको निपात ॥ एष परिहरामि ॥ पाआणं इति । पादयोर्यथा शोणिमा विलसति स्फारस्तथा नाधरे स्वेदाम्बु निटिले विराजति यथा कण्ठे न हारस्तथा । नि श्वासे न पुरातने तथा भवेदिदानीं यथा सौरभी मन्ये चन्द्रमुख्यै सुन्दरश्रीर्मार्गेण दत्तेव ॥ २२ ॥ श्री शोभा श्रीर्वेषरचना शोभा सपत्सरलशाखिपु । वाणी लक्ष्मीर्लवङ्गेपु विपे बिल्वेऽपीति पदार्थरत्नमाला ॥ कथ महाराजनिकट महित अस्माक विभो पुराणमध्यस्थ आर्यमाण्डव्यस्त गृहीत्वा अद्यापि नागच्छति ॥ मूर्ख आगतोऽस्मि खलु राज्ञा समम् ॥ त्वमेव मूर्ख ॥ आं दास्या पुत्रि हेमवतीति किम् अधिक्षिपसि माम् ॥ आर्य मा रुष्य । प्रेक्षणीय खलु ॥ ओ पदशब्द इव ॥ आ इति सूचनार्थको निपात ॥

[ Page 12 ] अपि सत्य सगीतशालाद्वारे तिष्ठति ॥ किं दीक्षितोऽहमिदानीं पूर्वमिव अलीक भणामि ॥ कतिवार दीक्षितस्त्वम् ॥ यदा यदा मामखादने वाञ्छा तदा तदा दीक्षितो भवामि ॥ आर्य माण्डव्य ब्राह्मणेपु खाटकोऽसि त्वम् । खाटक शौनिक इत्यर्थ ॥ आ गर्भदासि किम् अमन्त्रक मया पशुर्मार्यते ॥ आर्य त्व समन्त्रक मारयसि अन्य पुनरमन्त्रकम् ॥ हिसा तु तुल्या खलु ॥ हेमवति साधु भणितम् ॥ एषा पुना रण्डा आक्षेपक रिणी । एष पुन पिङ्गलचक्षी अभिनन्दक ॥ वयस्य त्वरिततरमागम्यताम् ॥ एष एमि ॥ तिष्ठ मूर्खशिरोमणे ॥ आर्य किं भ्रमसि प्रेक्षणीय खलु ॥ हन्त सत्यमेव भ्रम सवृत्त तस्मादेव तावत् ॥ हेमवति तव पराक्षणाय पदे पदे एव करामि ॥ घडिघडि इति देशीय शब्द ॥ आर्य जानामि जानामि ॥ अहो विचित्र सविधानम् ॥ एष आगतोऽस्मि । भा वयस्य गच्छ दूरम् एष कालसर्प ॥ आय क स क स ॥ मुग्धे तवापि भ्रमो जात ॥_

[ Page 13 ], क्षुधितस्यास्य चन्द्रलीमासमिव चिरादेतत् मम सन्निहित स्थम् । गौली सर्वेपामपि शकुन कथयति स्वय गत्वा तण्डुल जलभाण्डे पतति ॥ एष महाराष्ट्रीय आभाणक ॥ वयस्य मा बिभिहि ।

कस्मिन् देशे खलु स कालसर्पः ॥ अत्र अत्र ॥ भो मूर्खपदप्रथमाभिधेय, कौपीनं खलु ॥ भोरत्रयाणामपि अग्निहतकानां धूमैर्मन्दीभूते एते अक्षिणी। अपि सत्य कौपीनं येन पोरकनिमित्तं ग्रहीष्यामि ॥ अच्छीओ इत्यत्र 'पृष्ठाक्षिप्रश्नाः स्त्रियां वा' इति प्राकृते अक्षिशब्दस्य स्त्रीलिङ्गत्वमपि वर्तते। पोरको बटुः ॥ अहो ब्राह्मणस्य कियती दुराशा ॥ मैवं भण 'संग्रही नावसीदति' इति त्वयैव सर्वदा कथ्यते खलु ॥ अलमेतादृक्-संग्रहबुध्या ॥ एषाऽस्माकं चोरदेवी तव प्राणवल्लभा आनन्दसुन्दरी संगीत-शालाद्वारम् अलंकरोति ॥ मूर्ख शनैरेव भण ॥ किं चौर्यं कृतम्। अलं राजाज्ञया। कथं राजाज्ञा न भवतु ॥ न मम त्वं राजा, ननु वयस्यः ॥ वयस्य यौवने वर्तत इवात्रभवती। यतोऽस्याः। सुदिं इति। श्रुतिं भजति क्षोधनं वदनमिन्दुसुन्दरत्वं दरस्फुटितदाडिमीस्फुरितबीजलक्ष्मीं रदः। कुचोऽपि लिकुचत्वं फणिश्रियं च रोमावली कचोऽपि कुटिलत्वं कुहरतां च नाभी तथा ॥२३॥ भो न सुष्ठु त्वया वर्णितम्। तस्मादहं वर्णयिष्यामि ॥

[Page 14] मूर्ख अत्र विषयेऽपि प्रष्टव्यम् ॥ मुहं इति। मुखं चन्द्राकारं नयनयुगलं कैतस्निभं लतादीर्घे बाहू रदनकुसुमा [=कुसुमा] कुन्दसदृशी। स्तनौ बदरस्थूलौ चक्रचतुर श्रोणिवलयं कचा मेघच्छाया दशनवसनं बिम्ब-मधुरम् ॥ २४ ॥ चन्द्राआरं इत्यत्र 'सर्वत्र लवराणाम्' इति रलोपस्य 'द्रे रो वा' इति विकल्पादभावः ॥ साधु वयस्य साधु। इदानीं वर्तमानं दशाविशेषम् अनतिक्रम्य वर्णितम् ॥ अस्ति मयि सरस्वतीप्रसादः ॥ कौ पुनर्द्वावेतौ। एष कञ्चुकी एषा पुनर्धात्री। दाई इति देशीयः शब्दः ॥ अपि कुशलं धात्रीकञ्चुकिनोः ॥ कथं महाराज एव समागतः। महाराजस्य पादकमलनिभालनेन ॥ ममापीति भणतम्। आर्य कथमभितोऽपि मर्कट-चेष्टां प्रकटयसि ॥ हुं इदानीं मा किमपि भण। क्षुधापिशाचाविष्टोऽस्मि। हुमिति रोषाभिनयः ॥ वेत्र तिष्ठति मम हस्ते ॥ न खलु पिशाच पिशाचो बाधते ॥ मा तथा वद ब्राह्मणः खलु ॥ स्थविरापसद पुनरप्येकवारं वद ॥ किं तव तातः स्थविरो न जातः ॥ कथं सन्निधाने राज्ञो वयस्यतातं दूषयसि ॥ त्वं कथं महाराजस्य कञ्चुकिनमुपालभसे ॥

[Page 15] पिङ्गलकभर्तुः प्रियसखं मा मावमन्यस्व। भर्तुः स्वामिनः पत्युश्चेति चमत्कारः। 'भर्ता स्वामिनि पत्यौ' चेति केशवः ॥ आर्य किमिति त्वं धनिगृहजामातेव ब्राह्मणदासीव तुरुष्कपोषितविश्व-कद्रुरिव रोगिगोमायुरिव सर्वं लोकं दशसि। विश्वकद्रुमृगयाकुशलः शुनकः

'मृगयाकुशलो यः श्वा विश्वकद्रुः स कथ्यते' इति हलायुधः। जामाअरो इत्यत्र 'पितृभ्रातृजामातॄणामरः' इत्यरादेशः। गदाधरस्तु जामातर इवेति व्याचकार। तदसत्। (सर्वत्र एकवचनस्यैव जागरूकत्वेन बहुवचनस्य नितरामसंगतत्वात्) उत्तरत्र इसासि इत्येकवचनान्तत्वात् दार्ष्टान्तिकैकवचनानुसारात् दृष्टान्तान्तरानुगुण्याच्चैकवचनस्यैवाचितत्वात्॥ बुक्करो बुक्कति, राजा आकर्णयति। बडवडइ इति देशीयः शब्दः। आभाणकोऽयं देशीयः। यद् ब्राह्मणशिरोमणिराज्ञापयति॥ अहो ब्राह्मणस्य अनागरिकत्वम्॥ वयस्य अन्तःपुरं गत्वा रहस्यतया मन्दारककञ्चुकिनमाह्वयस्व॥ तथा। कथं प्रतिस्थानं स्खलामि। पणामो इति। प्रणामो देवाय प्रबलकचये दीयते मुहुः महातीर्थं सेव्यते प्रतिकलं मन्त्रिभिः सह। कुर्वती निर्वेदं तथापि न मां मुञ्चति असौ कथं देहे लग्ना चलद्दलपिशाचीव जरा ॥ २५॥ देवो देवता राजा च महातीर्थं सेत्वादिकं गुरुजनश्च मन्त्रिणो मान्त्रिका अमात्याश्च। चलद्दलोऽश्वत्थः॥ देव्वस्स इत्यत्र 'चतुर्थ्याः षष्ठी' इति षष्ठी॥ जयतु भर्ता॥ भो व्याघ्र: व्याघ्रः॥ किमेतदुपस्थितम्॥ क नु खलु धावामि॥

[ Page 16 ] हुं मूर्ख कथं प्रतिघटिकं भ्रमः॥ सत्यं प्रेक्षणीयं खलु॥ पेक्खणअं खु इति पाठे प्रेक्षणकं खल्वित्यर्थः॥ ननु ममापि भ्रान्तिर्जाता॥ ससि इति। शशिकरमहस्यचन्द्रकान्तः चणकहिमाम्बुविघृष्टचन्दनं वा। सुरकुलपतितः सुधारसः किं प्रियजनस्पर्शवशान्न भवत्येवम्॥२६॥ चणकहिमाम्बु चणकगुल्मेषु आस्तीर्णैर्वस्त्रादिभिः संभृतं तुषारोदकमित्यर्थः। एतेन अतिशैत्यं द्योत्यते। सिसिरहिमंबु इति पाठे शिशिरहिमाम्बु इत्यर्थः॥ तथाहि॥ अंगेसुं इति। अङ्गेषु पृथुविचकीलपुष्पमुद्रा नयनयोः सरससरोजकोशलक्ष्मीः। मूर्तो नववर्षापयोदकृत्यं चित्ते मे पुनः परमप्रमोदसारः॥ २७॥ विचकिलं मल्लिका। 'स्यान्मल्लिका विचकिलम्' इति जयः। विचकीलशब्दश्च वर्तते। तथा चोक्तं द्विरूपकोशे 'विचकीलं विचकिलम्' इति। अवयवेषु पुलकमुद्रा, नयनयोर्मुकुलीभावः, गात्रे सात्त्विकभावात् स्वेदसमृद्धिर्मनसि चाखण्डसच्चिदानन्दपरब्रह्मसाक्षात्कारो भवतीति भावः। कत्थ इत्यादि॥ कुत्र भागे स व्याघ्रः॥ संगीतशालाद्वारवलीपरिभागे॥ अहह कुम्भकारेण विप्रव्याघ्रं प्रेक्ष्य तूष्णीं कोलाहलः कृतः॥ किं नु खल्वस्य ऊनत्वं परंतु गल्लस्फुरणादिकं नास्ति। व्याघ्रस्य भीषणगम्भीरकण्ठध्वनिर्गल्लस्फुरणशब्दार्थः। भोः कश्चमाऽसि यन्मम

प्रभावेन आलिङ्गनं प्राप्तोऽपि एवं मन्त्रयसे ॥ तव प्रभावः ॥ भो ब्रह्म-
ण्यधर्ममहीमार्वभौमः ॥ तत्कथम् ॥ यस्तवैव ममाप्येकं हस्तकटकम् ॥
वयस्य कत्ते किम् ॥

[ Page 17 ] शष्पावलिः । नहि नहि पुरुषवेषोपकरणानि । उपकरणं सामग्री ॥ मन्दारक अत्रभवतीं पुरुषवेषवतीं कुरुष्व ॥ ननु पुरुषवेषवत्येव तिष्ठति ॥ आर्य कथ पदे पदे व्यामोहः ॥ हंहो वृद्धापसद ॥ अनेन सविधानेन कस्य वा न भ्रमो भवेत् ॥ यद्देव आज्ञापयति ॥ णरस्स इति । नरस्य नार्याश्च भूमिके निजास्पदं भूमिषु शोभयेते । एष समासाद्य तत्र भवतीं वेषः स्वयं शोभते ननु विचित्रम् ॥२८॥ अनेन चास्या लोकोत्तरः सौन्दर्यातिशयो व्यज्यते । मन्दारक अद्यप्रभृति पिङ्गलकेत्याकारयन् देवी यथा न द्रक्ष्यति तथैनां रक्ष ॥ यद्देव आदिशति ॥ द्वावपि युवां निजपत्तनं गच्छतम् ॥ वयस्य साधु विदग्धोऽसि, तरुणजनं गृहीत्वा स्थविरजनं प्रेषयसि ॥ मूर्ख देव्याः साध्वसेन ॥ एतत्साध्वसं अत्रभवतीविषये कस्मान्न भवतु ॥ आर्य वेषो दत्तः खलु ॥ तर्हि एतयोरपि वेषो दीयताम् ॥

[ Page 18 ] साधु ब्राह्मण कन्यामपि दत्त्वा वेषधारिभ्यामिव वेषोऽपि ग्रहीतव्यः । सोंगशब्दो वेषवाचको देशीयः ॥ मन्दारक गन्ता भव त्वम् ॥ तथा ॥ जम्मणो इति । जन्मनः प्रभृति वर्धिता मया लाल-नैर्विविधैः कन्यका । साम्प्रतं तव करे समर्पिता अस्याः प्रियो गुरुजनः सखी त्वम् ॥ २६ ॥ सही अ तुं इति पाठे सखी च त्वमित्यर्थः ॥ ननु सर्वस्येति वक्तव्ये कथमस्या इति विशेषनिर्देशः कृतः ॥ हेमवति साधु त्वया चिन्तितम् । एवमेव मन्त्रयितव्यम् ॥ पुरा अम्बाविसर्जनकाले ममापि शनैरेव किंचित्खेद आसीत् । शनैर्मन्दम् ॥ एतदपि मम कथयि-तव्यम् ॥ जयतु भट्टारकः । 'राजा भट्टारको देवः' इत्यमरः । जय जय भूमण्डलाखण्डल जय जय शिखण्डचन्द्रनरेन्द्रचूडामणे सुखाय ते भवतु मध्याह्नभोजनवेला ॥ वयस्य गच्छामः ॥ तथा ॥ एतावता गर्भनाटकं प्रवृत्तमिति ज्ञेयम् ॥ अहो अद्भुतमिदं सविधानम् ॥ को नु खलु वर्तते गुणग्राही त्वत्त ॥ सुखाय भवतु स्नानभवनो देवस्य ॥ एहि गच्छामः ॥

[ Page 19 ] तथा ॥ इत एतु भर्ता ॥ आगच्छ विदूषक ॥

इति पदवाक्यप्रमाणप्रमदाकान्तवासुदेवविरचितायाम् कर्पूर-
सुन्दरीनामसट्टकव्याख्यायां प्रथमं यवनिकान्तरम् ।

भो वयस्य किं बालविधवेव खिद्यमानः क्षीयमाणो विह्वल उद्वेष्टसे ॥ किम् अकारणं खिद्यते ॥ किमत्र कारणम् । वयस्य हेमवत्या देवीनिकटे अस्माकं वृत्तभाण्डं सर्वं स्फोटितम् ॥ साधु कृतं तया । खिद्यता तावत् ओलम्पट एष । मेंगो इति देशीय शब्दः । भो पूर्वमेव मम हृदये एवं शङ्काऽऽसीत्, एषा दुष्टदासी अनर्थं करिष्यतीति । तत्रापि पूर्वप्रभृति सा देव्या द्वितीय शरीरम् । अथ देव्या श्रुत्वा किमाचरितम् ॥ यदा चरितव्य तदाचरितम् ॥ कथयतु प्रियवयस्यः ॥ शृङ्खलासदानितो मन्दारकः । सा पुनस्तपस्विनी साध्वसवेपमाना क्लेशक्लान्तसुकुमारश्यामलाङ्गी अङ्गराजकन्यका भूषणपेटिकायां स्थापिता । अनुपदमेव पञ्चाशदङ्गना—

[Page 20] परिवारिता च । वेवमाणी इत्यत्र 'आदीतौ बहुलम्' इति ईकारः ॥ मण्डयतु नाम सा अङ्गानि मण्डनै, मा त्वं खिद्यस्व ॥ अलं मूर्खसमाश्वासनप्रकारेण ॥ भो किं दूयसे, तिष्ठतु सुरङ्ग निवातस्थले ॥ अत्थि इति । अस्ति नि श्वसितु यत्र नावकाश कथमिव । अङ्गसङ्कोचनेन सा तत्र वर्तता पेटके ॥ १ ॥ अथ हेमवत्यै पारितोषिकं किं दत्त देव्या ॥ अङ्गेषु यत् स्थित तदा तत्सर्वम् ॥ अहो न मया कथितं मूर्खेण ॥ तव परिहासो मम पुनरायासः ॥ किणो सा तस्मिन् काले दृष्टा त्वया तत्रभवती ॥ किणो इति प्रश्न ॥ धाराल इति । धारालबाष्पविसरार्द्रमुखस्तनाङ्घ्रि कम्पमानपेशलतनुस्तन्वी रुदती । अत्युष्णायतघननिःश्वासितानिला सा दृष्टिभ्या तादृशादृशापि कथंचिद् दृष्टा ॥ २ ॥ किं न प्रतिषिद्धा क्रुध्यता त्वया देवी । जूरन्तेण इत्यत्र 'क्रुधेजूर' इति जूरादेश ॥ बालं इति । बाला ताडयितुमत्युदारगमनावेगस्खलद्दंशुकम्, क्रोधाज्जृम्भणदष्टदन्तसिचया प्रेङ्खोलितभ्रूलताम् । एषा मम सपत्नीति यद्रुषो देवीं भयन्तीं तदा, लाक्षाशोणमुखी न किमपि सविधे द्रष्टु मया पारितम् ॥३॥

[ Page 21 ] क नु खलु गत तव शौर्यम् ॥ किं गृहिणीजनेषु शौर्यं कर्तव्यम् ॥ भव तावत्त्व मङ्गलभाजनं प्रतिवसन्तदीक्षितस्य जटापदक्रमाध्ययनदक्षिणस्य तपोविधिशुष्कशरीरस्य संप्राप्तमुनिनामधेयस्य

मम ब्राह्मणस्य वचनेन । भाणं इत्यत्र 'भाजने जस्य' इति जकारस्य लोपः ॥ अहो विशेषणपरम्परा ॥ वयस्य कथमीदृशः कालोऽतिवाहनीयः ॥ अहं वदामि ॥ जयतु भर्ता, पारिजातकविः संप्राप्तः ॥ वयस्य इदानीं तव विनोदकालो भविष्यति ॥ भ्रमरक विनयात् झटिति प्रवेशयताम् ॥ तथा ॥ जो इति । यो जानाति न किमपि निन्दति खलु स जानाति यः किमपि स ईर्ष्यया न खलु गृह्णाति स्फुटरसग्रन्थान्तरस्थं गुणम् । एषा कस्मान्म-मानने वसति ननु वाणी महाकेतकीकुल्कीलप्रवहत्सौधलहरी सौभाग्य-सारावहा ॥ ४ ॥ केतकीकुल्कीलप्रवहदित्यनेन वाण्या सौरभ्यातिशयः । सौधलहरीत्यनेन च माधुर्यविशेषो लक्ष्यते । कुल्कील. पर्वतः । 'निलिम्प-कन्तुकुल्कीलकलशाघ्याजवंजवा' । देवस्मरगिरिक्षीरवार्धिससारवाचकाः' इत्यमरस्यः । तत्ताक्कित्त इति । तत्तादृक्त्वग्भिः स्निग्धचरणा सौरभ्य-संकेतभूः शय्याकौशलशालिनी सुरचना वर्धमानलीलारसा ।

[ Page 22 ] एषा वारवराङ्गनेव कविता मुक्त्वा लज्जागुणं पश्यत्सु जनेषु संसदि कथं ममाननं चुम्बति ॥ ५ ॥ रुचिर्माधुर्यं कान्तिश्च । शय्या पदवाक्यसन्दर्भः शयनं च ॥ इत एतु तत्रभवान् । एष महाराज उत्तिष्ठति अवलोकयतु तत्रभवान् । ओलोएदु इति पाठेऽप्ययमेवार्थः ॥ एष प्रणामः ॥ स्वस्ति भवते ॥ आसनम् आसनम् ॥ इदं मसूरकम् उपविशतु पारिजात-कविः । 'पूरितं पेशलैः तूलैः पट्टवस्त्रादिभिः कृतम् । यदासनं चतुष्कोणं तन्म-सूरकमीरितम् ।' गादी इति महाराष्ट्रा वदन्ति ॥ वयं न केवलं कवयो भवामः विभवोऽपि । विभवः राजतन्त्रधुरंधरा इति भावः । अनेन वैदिकलौकिक मार्गप्रावीण्यमुक्तं भवति ॥ न खलु राजेति शिक्षयामि यत्किंचिद्वैदर्भी-प्रमुखनिखिलरीतिगर्भितं कालविनोदकाव्यं निबन्धनीयम् । गब्भिणं इत्यत्र 'गर्भिते णः' इति णत्वम् । निखिलरीतयः षड्विधा रीतय इत्यर्थः । तथाचाहुराचार्याः । 'वैदर्भी साथ पाञ्चाली गौडी चावन्तिका तथा । लाटी तथा मागधी च षोढा रीतिर्निगद्यते' इति ॥ अहो इति ॥ अहो स्वयं प्राज्ञतरप्रभूणां राजन्ति गाढं विनयातिरेकाः । वृत्तागमालङ्कृति-कुण्डलाना साहित्यहारा इव पण्डितानाम् ॥ ६ ॥ अयं च श्लोकः प्राकृत-संस्कृतसाधारणवृत्तः ॥ तुवरीअदु इत्यादि । त्वर्यताम् ॥ उपनय तूर्णं पुस्तकम् । उपनय समीपं नयेत्यर्थः ॥ किं बधिरोऽसि किं न श्रुतं त्वया कर्णाभ्यां निबन्धनीयमिति वचनम् ॥ कदा नु खलु निबन्धनीयम् ॥ ननु

बश्यवचाः खलु एष कविः॥ मया न ज्ञातम्॥ शृणु इदानीम्॥ अव-हितोऽस्मि॥

[Page 23] अस्ति निखिलपृथिवीमण्डलीमण्डनायमाना अमरावतीव बहुविधबुधनिवहनिवासानुकूला। बुधाः पण्डिताः सुराश्च। भोगवतीव रत्नराजच्छीर्षनागसहस्रसंकुला। नागाः कुञ्जराः सर्पाश्च। मिथिलेव-जनकानुवर्तिजनवसतिः। जनकः पिता जनकराजर्षिश्च। विशालेव अभीक्ष्णं सुमतिमानसानन्दसदायिनी। सुमतिः कविजनः सुमतिर्नाम राजा च। वाराणसीव विश्वनाथपादपुष्करवन्दारुसर्वप्रजा। विश्व-नाथः एतत्पुरीस्थितदेवः काशीस्थदेवश्च। अलकेव सततोपचीयमान-मनुष्यधर्मा। पुरीपक्षे मनुष्याणां धर्मा इत्यर्थः अन्यत्र मनुष्यधर्मा कुबेरः। द्वारवतीव वसुदेवाभिनन्दितगोविन्दा। वसूनां द्रव्याणां देवाः भर्तार इत्यर्थः, धनिका इति यावत्। अन्यत्र वसुदेवः कृष्णस्य पिता। गोविन्दाः गोष्ठाध्यक्षाः। 'गोष्ठाध्यक्षेऽपि गोविन्दः' इत्यमरः। अन्यत्र गोविन्दः कृष्णः। लङ्केव निरन्तररत्नाकरपरिवृता। रत्नाकरः रत्नखनिः समुद्रश्च। किष्कि-न्धेव मांसलस्कन्धयुग्ममनोहराङ्गदकुमारा। अङ्गदं केयूरम्। कुमाराः तनयाः। अन्यत्र अङ्गदो वालिपुत्रः स एव कुमारो युवराज इत्यर्थः। हस्तिनेव मांसलरमश्रुभीषणसुयोधनभुजबलपरिपालिता। सुयोधनाः समीचीनयोधाः दुर्योधनश्च। अयोध्येव सेव्यमानमहारामा। आराम उपवनम्। अन्यत्र रामो रामभद्रः। गङ्गेव परमहंसचक्रपरिवारिता। परमहंसचक्रं महायोगिसमूहः। अन्यत्र हंसाः मानसौकसः चक्राः चक्र-वाकाः। रेवेव सोमप्रभवा सोमलतानां प्रभवा उत्पत्तिस्थानमित्यर्थः। श्रीकण्ठस्तु उमया सहितः सोमो विश्वनाथः तस्याविर्भावस्थानमिति व्याचकार। अन्यत्र सोमप्रभवा चन्द्रोत्पन्नेत्यर्थः। गोदावरीव पद्मिनी-शतसमेता। पद्मिन्यः स्त्रीविशेषाः कमलिन्यश्च। यमुनेव भुजङ्गसंगता। भुजङ्गा धूर्ताः कालियश्च। सुरलेव प्रतिकूलदत्तभङ्गा। पुरीपक्षे शत्रुभ्यो दत्तपराभवेत्यर्थः। नदीपक्षे तु प्रतितटदत्ततरङ्गेत्यर्थः। तमसेव समर्याद-वर्तिसकरुण पुंनागा। पुरीपक्षे सविनयवर्तिसदयपुरुषश्रेष्ठेत्यर्थः। नदीपक्षे तु समीपवर्तिसवृक्षविशेषपुनागवृक्षेत्यर्थः। 'करुणस्तु रसे वृक्षे कारुण्येऽपि च कथ्यते' इति विश्वः। करतोयेव सदा जीवनप्रदा। जीवनं जीविका सलिलं च। ताम्रपर्णीव प्रतिपदशिखरिकरम्बिता। शिखरिणो वृक्षाः शैलाश्च। कावेरीव नानाविधद्विजविहरणा। द्विजाः पक्षिणो ब्राह्मणाश्च। प्रवरेव

भण्डीरकसनाथा। प्रवरा नाम नदी। भण्डीरकः शिखण्डचन्द्रपिता वृक्षविशेषश्च। गिरिदरीव हरिविवर्तनास्पदम्। हरयो वाजिनः सिंहाश्च। गगनस्थलीव प्रतिक्षणवर्धमानमित्रमण्डला। मित्रमण्डलं सुहृद्वर्गः सूर्यबिम्बं च। सरसीव रचितकुवलयप्रमदा। कुवलयं भूवलयम् उत्पलं च। सन्ध्यावेलेव परिदृश्यमानैकवर्णा। वर्णा- ब्राह्मणादयो रक्तपीतादयश्च। ज्वलनसंहतिरिवानेकहेतिसहिता। हेतयः आयुधानि ज्वालाश्च। कलशसिन्धुसीमेव निवसन्महोदारपीताम्बरा। निवसन्तो महान्त उदारा यस्यां सा तथा। पीतान्यम्बराणि वस्त्राणि यस्यां सा। तथा पदद्वयस्यापि कर्मधारय.। अन्यत्र तु निवसन्महसो दाराः तदर्थोऽयस्य तादृशः पीताम्बरो विष्णुर्यत्रेत्यर्थः। कुमुदबन्धुलेखेव हरिणालङ्किता। हरिणेति तृतीया। स च हरिरेतत्पुरीस्थो देवः कीर्त्यते। अन्यत्र हरिणः कुरङ्गः। कादम्बिनीव रच्यमाणदूरागतस्तोकरुलोका, स्तोककालजनाश्चातकाश्च। वनराजीव भूदारपरम्परानिषेविता। भूदारा महीजानयो वराहाश्च। शृङ्खलावती नाम नगरी। यत्र अष्टादशवर्षदेशीयानां विदग्धस्त्रीणां मन्दनिश्वासपवनघनसौरभाघ्राणलम्पटानेकभ्रमरग्रामझङ्कारवाचालितं शोणाङ्गुली विद्रुमकाण्डदह्यमान—

[ Pgae 24 ] विपञ्चिकातन्त्रीकलक्वाणस्थूलीकृतम्। आनिषादमापञ्चमं प्रत्येकतया व्यक्तीकृतसप्तस्वरं प्रत्यूपसंगीतसमृद्धिभरं श्रुत्वा लज्जाशीला इव न दर्शयन्ति निजतुण्डं गन्धर्वजना। अत्र निषादमारभ्य पञ्चमपर्यन्तं गणने कृते सप्त स्वरा भवन्ति। तथा चोक्तं संगीतसागरे 'निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेति कथ्यन्ते सप्ततन्त्रीस्वरा इमे॥' इति। यस्या. पुन रत्नकल्पिताभ्रंकषवप्राकारभित्तिखचितपद्मरागराजिदीप्तिच्छटाघोरणीभिः सारथिना सह चिरमरुणाभिख्या प्राप्तो दिवसमणिः। अरुणाभिख्या शोणकान्तिः अरुणनामधेयं च। यस्यां मज्जनोन्मज्जनशीलयादस्सन्तविदन्तुरदुरवगाहा. अगाधा. महापरिखाः दृष्ट्वा एवा पुनरद्यापि सप्तार्णवीं पीत्वा वाडवहिंसादोषं विशङ्कमान इव झटित्येव न पुनस्तज्जीवनोचितानि तानि सलिलानि च सलीलमुदरान्मुक्तवान्मैत्रावरुणिः। वाडवो ब्राह्मण और्वश्च। अपि च यस्यां चञ्चच्चटुलचटपटात्करणपेलवपताकादण्डपट्टिकाचण्डगन्धवाहयुवधावितामुवाहः प्रकटकुटिलविवट कठिनविषमभीषणाराल- करालकडाराक्षिवीक्षणविक्षेपदुर्लक्ष्यदष्टदंष्ट्रादन्तुरितवदनकालायसपरिघसदृश-

चण्डदन्दशूकप्रतिच्छन्दसंदर्शनभयाक्रन्दन्मध्यदेशाहिण्डमानसुन्दरचन्द्र-बिम्बः, चूडावगुम्फितसंफुल्लपुष्पमालिकासंदोहसंदेहसदायिसौन्दर्य-सन्दानिताशेषनक्षत्रवीथिकः मुकुटशिखरावस्थापितकान्तकामधेनुतक्रा पाण्डुरच्छत्रकः चतुरगवाक्षकोटिमणिविच्छुरितदशदिशः जयति काऽपि डमरुकनामधेयः प्रासादविशेषः । कालास इत्यत्र 'कालायसे यस्य वा' इति यकारस्य लोपः । अस्माकं पुरं वर्णितं भवतु पुनरपि भोष्यामि ।। तिष्ठति तत्र जिष्णुरिव घनवाहः । घनवाहो दृढाश्वो मेघवाहनश्च । कृशानुरिव दीर्घशिखावान् । शिखा चूडा अर्चिश्च । कीनाश इव परदण्डधरः । परदण्डः शत्रुषु दण्डः उत्कृष्टदण्डश्च । नैऋत इव पुण्यजन—

[Pgae 25] वरिष्ठः । पुण्यजनाः पवित्रजनाः राक्षसाश्च । प्रावृड्राज इव भुवनपतिः । भुवनं जगत् सलिलं च । प्रावृड्राजो वरुण इत्यर्थः । पवन इव जगत्प्राणः । जगतां प्राणः रञ्जकत्वेन प्राणवत्परमप्रेमास्पद-मिति राजपक्षेऽर्थः । पवनपक्षे तु मञ्चाः क्रोशन्तीतिवत् जगच्छब्देन तत्रत्या जना लक्ष्यन्ते तेषां प्राणः संरक्षणशील इत्यर्थः । यक्षपतिरिव राजराजपदलाञ्छितः । राजराजपदं सार्वभौमपदम् अन्यत्र राजराज इति पदेन लाञ्छित इत्यर्थः । चन्द्रकलापीड इव वृषवर्धनविदग्धः । वृषो धर्मो वृषभश्च । श्रीकण्ठस्तु विसवड्ढणविअड्ढो इत्यत्र विषवर्धनवि-दग्धो विषच्छेदनचतुर इति पक्षद्वयेऽपि व्याचकार । विष्णुरिव विर-चितोन्मत्तबलिध्वंसनः । बलिनो बलवन्तः अन्यत्र बलिर्दानवेन्द्रः । शता-नन्द इव चतुराननः । चतुराननः पेशलाननः चिह्नं च । तीक्ष्णमयूख इव लोकबान्धवः । पक्षद्वयेऽपि साधारणमिदं पदम् । श्रीकण्ठस्तु सूर्य-पक्षे रूढं, राजपक्षे यौगिकमिदं पदमिति व्याचकार । शशधर इव सकलकलाप्रकाशनाभिज्ञः । कलाः विद्याः भागाश्च । हिमालय इव पृथिवीधरश्रेष्ठः । पृथिवीधराः राजानः शैलाश्च । सुरालय इव कल्याण-रूपाभिरामः । कल्याणरूपं शुभसौन्दर्यं सुवर्णाकृतिश्च । गन्धर्वराज इव चित्ररथः एतच पदम् एकत्र रूढम्, अन्यत्र यौगिकम् । युधिष्ठिर इव धर्मभूः । धर्मभूः आचारस्थानम् अन्यत्र धर्मराजात्पन्न इत्यर्थः । पाण्डु-द्वितीयपुत्र इव भीमसेनः । अभिमन्युपितेव सुभद्रालंकृतशरीरः । सुभद्रं सुमङ्गलम्, अन्यत्र सुभद्रा कृष्णस्य सोदरी । दुर्योधन इव अन्या-दृशाधृतराष्ट्रप्रसादः । अन्यादृशं यथा तथा धृतो राष्ट्रे प्रसादो येनेत्यर्थः ।

अन्यत्र अन्यादृशो धृतराष्ट्रस्य प्रसादो यस्मिन्नित्यर्थः। अङ्गराज इव शू (सू) रदायादः शूराणां दायादो बान्धवः, अन्यत्र सूरस्य रवेर्दायादः सुत इत्यर्थः। 'दायादौ सुतबान्धवौ' इत्यमरः। हेरम्ब इव विनायकः। विगतो नायको यस्य स तथोक्तः। सर्वोत्कृष्ट इति भाव.। अन्यत्र विनयति शिक्षयति इति विनायकः। तस्य सर्वविद्यागुरुतया शिक्षकत्वमुपपद्यते। कार्त्तिकेय इव तत्तादृशशक्तिधर'। शक्तिर्बलम् आयुधविशेषश्च। आदिमत्स्य इव कृतमहागमोद्धारः। महागमा. उ सवद्रुमाः। 'मह उद्धव उत्सव'। 'पलाशी द्रुद्रुमो गमः' इति चामरः। अन्यत्र महागमा महावेदाः। महाकमठ इव निमग्नमहीधरावलम्बनश्वरः। निमग्नमहीधराः राज्यभ्रष्टराजाः। अन्यत्र महीधर' पर्वतः मन्दर इति यावत्। पुराणवराह इव विपुलास्फोटनपटुतरः। विपुलास्फोटनं महायुद्ध महीदारण च। नरसिंह इव आर्तभक्तप्रह्लादकरुणाकरः। आर्तस्य भक्तप्रह्लादवरणानाम् अन्नसतोषदयानाम् आकर इत्यर्थः। अन्यत्र आतमभक्तप्रह्लादकरुणाकर। वामन इव त्रिभुवनाक्रमणपराक्रमी। त्रिभुवनं गङ्गा-यमुना-सरस्वत्यात्मिका त्रिजलीत्यर्थ. तस्याक्रमणमवगाहः तत्र पराक्रमी साहसी कुशल इति यावत्। अन्यत्र त्रिभुवनं त्रिजगत्। परशुराम इव अनुत्तणक्षत्रियवंशवर्धननिष्णात.। वर्धनं पालनं छेदनं च। दशरथराम इव निजगुणविरचितसुमित्रानन्दः। सुमित्राणि सुहृदः। अन्यत्र सुमित्रा लक्ष्मणमाता। बलराम इव गदैकसहायः। गदा आयुधविशेषः। अन्यत्र गदो यादवभेदः। कृष्ण इव बहुप्रमदालिङ्गितः। प्रमदाः संतोषाः स्त्रियश्च। कसणो त्रिभ इति पाठेऽपि कृष्ण इवेत्येवार्थः। कुद्दनाघोट इव अङ्गीकृतभाण्डः। भाण्डं मूलवणिग्धनम् अश्वाभरणं च। 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने" इत्यमरः। शिखण्डचन्द्रो नाम महीमहेन्द्रः॥ यं खलु निजधीनिन्दितबृहस्पति' सैन्धववारणारोहकुशलः अमलिनशीलः अखण्डपृथिवीमण्डलाखण्डलो भण्डीरको हेमवर्मणोऽपत्येन लीलावत्या धर्मदारैः सह स्थविरजनशरण्यम् अरण्यं जिगमिषुरात्मना चिरकालगोपायिते सर्वसर्वसहामण्डलेऽभिषिक्त वान। दोग्घन्दो [= दोग्घट्टो] इति वारणवाचको निपातः। रण्णं इत्यत्र 'लोपोऽरण्ये' इत्यकारस्य लोपः। यस्य भुजप्रतापज्वलज्ज्वलनज्वालास्फडित्युड्डीनम् अम्बराभ्रमग्नं शुद्रमेकं स्फुलिङ्ग सूर्यः

[ Page 26 ] सूर्य इति वदन्ति मुग्धा जनाः। फडिति शब्दानुकारः। यस्य महत्यः कीर्तयः शोभन्ते महीषु हिमानीधरखर्जूरमहीधरदुग्धवार्धि-

रूपैः नभस्तले पुनः शरत्कालतारतारेशरूपैः। हिमानीधरो हिमवान
खर्जूरमहीधरः कैलासः। सरदआल इत्यत्र 'शरदो द.' इति दकारः। अ
राजनीतिं वक्तुमुपक्रमते। एसो उण इति। एष पुनः स्वयं बालोऽपि अ
सरन् कुलक्रमागतानां धीसचिवानां धिषणाम्, अनुल्लङ्घमानो वृद्धपुरोहि
निर्दिष्टं नीतिपथं, संमानयन् बन्धुसहस्रं, मण्डयन् स्निग्धमण्डलमखेद
नागरं जनम्, अगृह्णन् षष्ठभागाधिकम्, अपश्यन् परकीयं स्त्रीरत्नम्, आह
नानाविधानि यज्ञशतानि, असहमानः दुर्विधदीनाक्षराणि, अहसन् प
वामनपङ्गुकुब्जबधिरान्, प्रणमन् स्थविरयोगियतिदेवता', कु
जीर्णदेवकुलोद्धारम्, निर्मापयन प्रपामण्डपतडाक्शालाः कारयन्नुप
यनविवाहकर्माणि, शृण्वन् स्पशकथ्यमानं पुरराष्ट्रवृत्तान्तम
स्पशाः चाराः। बुध्यमान. प्रणिधिजनै परराजकार्यरहस्यानि। 'प्रणि
धिर्गूढचारः स्यात्' इति वामनः। परिहरन् स्थलजलदुर्गेषु सुरङ्गादिकप
मार्गम्। विचारयन् प्रतिक्षणं किंवदन्तीविशेषम् अपृशन्नन्याय्यधनम
अफरिसंतो इति पाठेऽप्यापृशन्नित्येवार्थः। विकलयन्मलिम्लुचव
प्रहरन् पिशुनलोकं, शिक्षयन् मृषावादिनं, बहु मन्यमानो दूरागतं धी
जनम्, विस्मरन् दोषशतम्, कीर्तयन् गुणलेशमनतिक्रामन् आर्यवच
मदूषयन् बालभणितमपि मतिमार्गम्। अत एवोक्तं नीतिचिन्तामणौ
'युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि' इति। अप्रवेशयन् रहस्यगोष्ठ्यां
तृतीयं जनम्। तथा चोक्तं मन्त्रसर्वस्वे 'षट्कर्णो भिद्यते मन्त्रः' इति। अ
धिक्षिपन् शिशुस्थविरललनाः द्विगुणयन् हरिविश्वनाथप्रमुखदेवमहो
षम् अच्छिन्दन् महाशाखिन अस्तुवन्नात्मनो गुणगणं मार्जयन् धनैर्दरि
जनललाटगतदरिद्रत्वाक्षराणि अक्लेशयन् भृत्यसार्थं निर्वेशयन्नुन्मत्तवि
धिनः वर्धयन् साधुप्राणिनः स्मरन्

[ Page 27 ] पुराणराजपावनचरितानि, मुञ्चन् विगीतचरि
अमुञ्चन् कौलधर्मं नल इव नहुष इव धर्म इव राम इव हरिश्चन्द्र इ
शिबिरिव पृथुरिव मुचुकुन्द इव मुकुन्द इव मान्धातेव मनुरिव जनक इ
रक्षति सर्वं जनम्। मंधाआरो इत्यत्र 'ऋत आरः सुपि' इत्यारादेशः
अलमित' परं काव्यबन्धेन। इदं विज्ञाप्यते। हत्थी इति। हस्ती घो
स्यन्दना योधवर्गः कोशो राष्ट्रं नागरा राज्यं वयम्। एतत्सर्वं ते वश
धोरण्याः नूनं प्राप्तं नाथ स्वाधीनभावम् ॥७॥ एतत्सर्वं राज्यं ते वशः स्व
धीनमिति भावः॥ अलं ते एकं वचनामृतमेव, किं तेन मम कार्यम्
अस्ति खलु मम सूतं कविताम्हाराज्यम्। एतेन राज्यापेक्षया सर्वविद्ये

यथा च कविताशास्त्रात्तदाधिक्यं वर्णितं भवति। तथा चोक्तं भर्तृहरिणा 'सुकविता यद्यस्ति राज्येन किम्' इति। 'का विद्या कवितां विना' इत्याचार्याश्चाहुः। 'विद्यारत्नं परमकविता' इति मल्लिनाथोऽप्याह। अत एवोक्तं कविकल्पलताकारेण 'सर्वं विनश्यति विहाय कवित्वमेकं कायेन साकमिति साधु विचार्यमार्याः। तस्मादनन्यमनसः सुकृतैरलभ्या स्वभ्यासमेव कवितासु परं कुरुध्वम् ॥' इति दिक्॥ ननु सत्यमेव ॥ चिरं जीव साध्यते। गम्यत इति यावत्॥ वयस्य एतावन्तं कालं कथमपि पारितम्, इदानीं पुनर्न पारयामि। तत्खलु मम मनसि शल्यं वर्तते। यत् खलु अस्याः प्रियो गुरुजनः सखी त्वमिति धात्र्या पुरा भणितम्॥ वयस्य धीरो भव॥ वयस्य एकैकं तस्याः प्रतीकं वर्णयन्तौ कालयापनं कुर्वः॥ किं तत्र मृष्टान्नं प्राप्यते। तथैव कर्तव्यम्॥ वंकं इति। वक्त्रं तस्याः समुकुरबिम्बडम्बराभम्।

[ Pgae 28 ] नेत्रे घनकदलीदलायते। मध्यं तन्नलिनमृणालतन्तुतुच्छम्। श्रोत्रे रतिकृतशष्कुलीसमे ॥८॥ शष्कुली भक्ष्यविशेषः॥ चंपेअ इति। चाम्पेयप्रतिकृतिहारिणी च नासा। शैरीषीं धरति श्रियं युगं भुजयोः। भ्रूदण्डौ स्मरधनुर्विडम्बचण्डौ। कण्ठस्तस्या विलसति पाञ्चजन्यशोभः ॥९॥ दंताली इति। दन्तालिर्न सहते कुन्दपुष्पलक्ष्मीम्। वक्षोजौ गणपतिमोदकोपमानौ। नाभी तस्या मनोरमगम्भीरान्धुबन्धुः। पादौ तस्याः स्थलशतपत्रकान्तिचोरौ ॥ १० ॥ अन्धु. कूपः॥ बन्धूअ इति। बन्धूकद्रुमसुमबन्धुररक्तौष्ठः। रोमालिर्मलयजधूमरेखिकाली। जङ्घे सुमशरकाहलानिभे।

[Page 29] ऊरुस्तस्या नृपकदलीसब्रह्मचारी ॥११॥ मलयजं कृष्णागरुरिति भावः। आली सखी समानेति यावत्॥ सोमाण इति। सोपानप्रतिकुलितं त्रयं वलीनाम्। श्रोणिस्तस्या मदनशकटचक्रमनोहरा। कद्दलिच्छदसरला दशाङ्गुलयः। खर्जूरीशुकमुखपाटला नखास्तस्याः ॥१२॥ वयस्य किं क्रियताम्। अच्चुण्हा इति। अत्युष्णा मे पृथुलवेदना भवन्ति निश्वासदण्डा, जिह्वा शुष्का भवति सलिल लोचने वमत् अङ्गम्। कल्पस्थूलं केवलं निमिषः कण्ठनालः शिथिलः, दीर्घा मोहा न रोचते जनो इन्व तस्या वियोगे ॥ १३ ॥ अहो पत्रवल्लखलु मदनायलङ्कविलासलिष्ट एषः। मदनापङ्कं मदनोत्कण्ठा। समाधसिद्धि समार्थसिद्धि॥ रमणी इति ॥१४॥ भावः आत्मा। प्राकृतसंस्कृतसाधारण्यपादरोऽयं श्लोकः॥ सुखं ददातु देवस्य मध्याह्नवेला। इदानीं खलु। तत्तं इति। ततमाच्छादयति

धूलिभिर्मदकलं मरतं मुहुर्हास्तिकं पान्था झटिति चलन्ति तान्ततनवो धर्मप्रपापालिकाम् ।

[ Page 30 ] मयूरो निद्राति कोटरे कलरवा गोपानसीपु स्थिताः कीरः पञ्जरमेति भवन्ति बलवत्तृष्णाकुलाः शारिकाः ॥१५॥ हास्तिकं हस्तिसमूहः । ( पालिकाः प्रदेशाः । पवामञ्झमं इति पाठे प्रपामध्यमित्यर्थः । ) अपि च । वक्खेण इति । वक्षसा प्रेरयन्त्यो घटं निजस्तनाहितम् । खेलन्ति सरोनीरेषु सारङ्गशिशुलोचनाः ॥ १६ ॥ परिहरिअ इति । परिहृत्य जवेन कञ्चुकानि निजसिचयाञ्चलवायुना कुर्वन्तः । स्तनजलशमं निभालयन्त्वं तरलयन्ति जनं वधूविशेषाः ॥१७॥ स्तनजलशमं स्तनसंजातस्वेदजलापनोदम् । अत्रोत्तरार्धे सिहणजलसमं वहूविसेसा सडपडअंति जणं णिहालअंतं इति पाठे स्तनजलशमं वधूविशेषाः तरलयन्ति जनं निभालयन्तमित्यर्थः । अपि च । हिरी इति । ह्रीवलितकन्धरं धुरिस्थितानां बालानां ये हिमाम्बुरसघृष्टं सहिमवालुकं चन्दनम् । गले सरभसं स्तनोपरि स्खलद्धस्तं चिरं विलिप्तमुरोमण्डले सदा कुर्वन्ति धन्याः खलु ते ॥१८॥ हिमवालुका कर्पूरम् ॥ वयस्य वृश्चिकवेदनादु:सहं विरहदहनसंदीपनाज्यं खलु वन्दिजनवर्णनम् । तस्मान्नास्त्यत्र विषये देवीप्रसादमन्तरेण प्रतिकारः ॥ एवं ॥ कोऽत्र दौवारिकः ॥ एतु एतु भट्टारकः ॥

इति पदवाक्यप्रमाणज्ञमहोपाध्यायभट्टनाथविरचितायाम् आनन्दसुन्दरीनामसट्टकव्याख्यायां द्वितीयं यवनिकान्तरम् ।

# [ ३ ]

[ Page 31 ] ही हीमाणहे इत्याश्चर्यद्योतको निपातः । किमिति परिहसामि प्रियसखं, भवत्वेवं तावत् । भो वयस्य किं नु खलु लब्धवैदूर्यखनिर्दरिद्र इव मुषितमणिपेटिकश्चोर इव भक्षितमोदको बाल इव श्राद्धभुक्तो ब्राह्मण इव प्राप्तसंभोगा बालरण्डेव हसन् तुष्यसि ॥ वयस्य प्रसादिता खलु देवी ॥ ननु प्रकारः कथ्यताम् ॥ गए इति । गते शय्योपान्तं मयि लघु विदूरं गतवती गते तत्रागता सपदि पुनः पर्यङ्कशयनम् । स्थिते तस्मिन् यातुं यत बहिः प्रवृत्ता सरभसं कवाटव्यासक्ते कठिनक्षितिभागे स्थितवती ॥१॥ साधु त्वया प्रसादिता ॥ मूर्ख शृणु ॥ ततस्ततः ॥ पुणो इति । पुनर्मयि पुरोगते विमुखमद्धसैव स्थिता मया गत्वा संमुखं स्पृष्टे वस्त्राञ्चले।

धुतं सरभसेन तत्करतलेन तया ततः कथमपि धृतो मया सह मिथैव तस्याः करः ॥२॥ किं तदा जातम् ॥

[ Page 32 ] भमिद् इति। भ्रमितालसाक्ष्णाविलोचनप्रभाकिरणाल्पायतगुणबद्धाङ्कः। अहमत्युदासमनसगिन्यास्त्वरया रमण्याः कोपकवलीकृतः क्षणम् ॥ ३ ॥ श्रीकण्ठस्तु रमणीअरोवकवलीकओ इत्यत्र रमणीयेन कोपेन कवलीकृत इति व्याचख्यौ ॥ ततस्ततः ॥ तुज्झ इति। तव प्रियासि न प्रियोऽसि त्वं न मम यस्यां मनस्तव खलु तस्या गृहं प्रविश। इत्थं भणितं देव्या ॥ त्वया किं न भणितं तस्या गृहं पेटिकेति ॥ नहि नहि॥ तर्हि किं त्वया कृतम् ॥ वक्केहि इति। वक्रैः सूक्तिरचनैः किमस्ति कार्यम् एषोऽस्मि किंकरजन इति पदं गृहीतम् ॥४॥ अहह नूपुरचिह्नेन प्रियापादेन संताडित एषः। भो वयस्य कृतार्थोऽसि ॥ कथं न कृतार्थः ॥ अग्गेल्लं ति इति। अवदन्तीं धृतक्रोधा स्पर्शे झटिति पुलाङ्किताम्। प्रसादयन्ति धन्याः खलु वन्दनैर्नितम्बिनीम् ॥५॥ ततस्तया किं कृतम् ॥ दत्तिउत्तिट्ठेति दत्तिपूर्वमुत्थापितः ॥ अयमेव किं प्रसादः ॥ शृणु पुनरपि ॥

[ Page 33 ] किमेतद्रामायणमारब्धम् ॥ वयस्य तदा खलु। कुणंता इति। कुर्वन्तः पूर्वं मां कुवलयनयनीमध्यमगतं स्निग्धो धारालमनन्तरं मयि कज्जलरसम्। प्रददतो मोहं मे मनोहरतमसां क्षणमथो दृगन्ता देव्या निजशयनमङ्के निपतिताः ॥६॥ ततस्ततः ॥ तत्क्षणमेव शयनीयं निजाङ्कैर्मण्डितवती ॥ अहमपि। तामज्जअ इति। ताम्रजव्यजनविच्छसमीरणैः देवीं स्थितः क्षणमधो भुवि वीजयन् ॥ हुं ततस्ततः ॥ सा स्न्याय स्तनभारवशात्कथमपि मनोहरेण मां कृतवती शयने करेण ॥७॥ अपि ततः संवृत्तः कुमुदबन्धः ॥ अलं मूर्ख परिहासेन ॥ भो एषा जरतीपृच्छगाथा तिष्ठतु सा पुनः सुकुमाराङ्गदूषितहरिद्रावर्णा शिलागोलस्तनी किं मुग्धा ॥ मुक्तेव ॥ हिण्डता नाम क्षणम् आलानशृङ्खलाभ्रष्टेव बालकरेणुः पेटिकामुक्ता। आणालमित्यत्र परोक्ष इत्यत्र च 'आलाने लनोः' 'करेण्वा रणो' इति लनोः रणोश्च स्थितिपरिवृत्तिः ॥ तत्कथम् ॥ आर्यपुत्र अद्यैव तव मनोऽनुरूपं करिष्यामीति देव्या भणितम् ॥ भो वयस्य उपरि सुरतमिति तस्या भावः ॥

[ Page 34 ] मूर्ख अलं भावव्याख्यानेन ॥ जयतु भर्ता, एषा देवी विवाहं कर्तुं आगच्छति ॥ वयस्य यद्यपि तोऽपि नन्वेषा आत्मन एव पुन-

